# संस्कृतवार्ता

दिनाङ्कः- 29-11-2020 सायम् - 06:20

अनुवादकौ –ऋचा-संजयौ

आशुलिपिक - प्रेम:

| |
|---|
| इयम् आकाशवाणी |
| सम्प्रति वार्ताः श्रूयन्ताम् |
| प्रवाचिका – ऋचा झा: |

मुख्य-वार्ताः

- प्रधानमन्त्री नरेन्द्रमोदी प्रावोचत् यत् कृषि-परिष्कारैः कृषीवला: सबला: भविष्यन्ति। एतत्परिष्कारैः तेभ्य: नूतनाधिकारा: अवसरा: स्वातन्त्र्यञ्च प्राप्स्यते इति।
- प्रधानमन्त्री मोदी अद्य पूर्वाह्णे स्वीये मन की बात इति कार्यक्रमे देशवासिभि: साकं विचार विनिमयं व्यदधात्। तेन प्रोक्तं प्रौद्यौगिक्या साहाय्येन संस्कृति: भावनात्मकं सम्बलं अधिप्राप्नोति, गुरोनानकस्य विचारा: वैकूंवरत:-वेलिङ्गटनं, सिंगापुरत:-दक्षिणाफ्रीकां यावत् गुञ्जायमाना: इति।
- देव दीपावली इति वैश्विक दीपोत्सवकार्यक्रमे भागं ग्रहीतुं प्रधानमन्त्री श्रीनरेन्द्र मोदी श्व: वाराणसी यात्रां सम्पादयिष्यति। प्रधानमन्त्रिण: दीपज्वालेन साकं दीपोत्सवोऽयं समारप्स्यते, गंगा नदीम् उभयत: एकादश लक्षसंख्याका: दीपा: ज्वालयिष्यन्ते इति।
- केन्द्रीयो गृहमन्त्री अमितशाह: कृषकान् समाश्वासयत् यत् प्रशासनं तै: साकं संवादार्थं तत्समस्या: सामाधातुं वर्तते सन्नद्धम्।
- कोविड-19 इति वैश्विक-संक्रमणदिशि भारतीय: संघर्ष: निर्णायक-स्तरं अवर्धत। स्वास्थ्यलाभमिति: षड् अष्ट दशमलवोत्तर त्रिनवतिमितास्ति संवृत्ता।

- अपि च क्रीडावार्तायाम्,
- सिडनी क्रीडांगणे अद्य क्रीडिता स्पर्धा आस्ट्रेलिया दलेन विजिता। अनेन सहैव स्पर्धामालिकापि स्वायन्तीकृता ऑस्ट्रेलिया देशेन।

--------

(प्रिया: श्रोतार:, कोविड नाइन्टीन इति वैश्विक संक्रमणं विरुध्य राष्ट्रं ऐक्यभावनया युध्यति। भवन्तोऽपि संक्रमणं इदं परास्तुं सन्नद्धा: भवन्तु। मुखनासिकाच्छादकं, सामाजिकदौर्यानुपालनं, पाणिपाद-प्रक्षालनञ्च इति उपायत्रयं सर्वदैव अवधारयन्तु। यतोहि कोरोना प्रतिरोधी-नियमपालनमेव कुशाग्रबुद्धि-परिचायकम्।)

मन की बात

प्रधानमन्त्रिणा श्री नरेन्द्रमोदिना प्रतिपादितं यत् अचिरमेव विहितै: कृषिपरिष्कारै: कृषकेभ्यो नूतनानि सम्भावना-द्वाराणि समुद्घाटितनि सन्ति इति । अद्य पूर्वाह्ने एकादश वादने स्वीये मन की बात इति कार्यक्रमे भाषमाणो नरेन्द्र मोदी अब्रवीत् यत् कृषका: सुदीर्घकालात् अस्मै परिष्काराय प्रतीक्ष्यमाणा: आसन्। एतत्-प्रशासनेन हि परिष्कारोऽयं सम्पूरित:। प्रधानमन्त्रिणा स्पष्टीकृतं यत् संसदि बृहन्मात्रायां विचार-विमर्शानन्तरं कृषि-परिष्कारा: इमे विधिरूपेण सवृत्ता:। एतै: परिष्कारै: न केवलं कृषका: बन्धनै: विमुक्तीक्रियन्ते अपितु तेभ्यो नूतनाधिकारा:, अवसराश्चापि प्रदीयन्ते इति। प्रधानमन्त्रिणा युवान: प्रार्थिता: यत् ते निकटवर्ति कृषकान् कृषीक्षेत्रीय नवाचार-विषये अपि च अचिरमेव विहिते-कृषि परिष्कार विषये च जागरूकतया बोधयेयु: इति।

प्रधानमन्त्रिणा श्रीमोदिना प्रौद्योगिक्या सांस्कृतिक-रिक्थं अधिकाधिकजनेषु सम्प्रापणाय अपि सबलं प्रतिपादितम्। प्रधानमन्त्रिणा मोदिना प्रसन्नता आपादिता यत् देव्या: अन्नपूर्णाया: प्राचीनतमा प्रतिमैका शतं वर्षानन्तरं स्वदेशं प्रत्यानीयते। एतदर्थं तेन कनाडा-प्रशासनाय अन्य-जनेभ्यश्च कार्तज्ञं प्रकटीकृतम्।

प्रधानमन्त्री मोदी न्यूज़ीलैण्डदेशीयं नवनिर्वाचितं संसद्-सदस्यमपि प्राशंसयत्। अमुना प्रोदितं यत् भारतीय-संस्कृते: प्रचारप्रसार: प्रत्येकं भारतीयाय गौरवास्पदं अनुभावयति इति।

प्रधानमन्त्री मोदी अब्रवीत् यत् श्व: गुरो: नानकदेवस्य एक-पञ्चाशदधिक पञ्चशतं प्रकाश-पर्व आमानयिष्यते। अमुना प्रत्यपादि यत् गुरो नानकदेवस्य समुपदेशा: वैंकूवरत:-वेलिङ्गटन, सिंगापुरत:-दक्षिणाफ्रीकां यावत् गुञ्जायमाना: वर्तन्ते इति।

दिसम्बर मासस्य पञ्चमे दिनांके महान् विचारकस्य दार्शनिकस्य श्रीअरबिन्दोवर्यस्य पुण्यतिथि: आमानयिष्यते। असौ युवकान् समभ्यर्थयत् यत् ते श्रीअरबिन्दोवर्यस्य व्यक्तित्व विषये अधिकाधिकं जानीयु:। श्री अरन्विन्दो-वर्यस्य शिक्षा यूनां प्रशिक्षणाय आसीत् इति।

प्रधानमन्त्री मोदी अब्रवीत् यत् दिसम्बर मासस्य षष्ठे दिवसे बाबा साहेब-भीमराव-आम्बेडकरस्य पुण्यतिथि: आमानयिष्यते। प्रधानमन्त्रिणा मोदिना अस्मिन् दिवसे राष्ट्राय संकल्पं स्वीकर्तुं, एक-व्यक्तिरूपेण संविधान-द्वारा प्रदत्त कर्तव्यानाम् अनुपालनाय प्रार्थितम् इति।

प्रधानमन्त्री मोदी अभाषीत् यत् राष्ट्रम् अधुना आगम-निर्गम-रोधादेशानन्तरं कोविड-19 इति वैश्विक संक्रमणरोधी सूच्यौषध-विषये चर्चयत् अस्ति। श्रीमोदिना स्पष्टीकृतं यत् इदं संक्रमणं विरुध्य कीदृशी अपि अनवधानता महत्कष्टकरी सेत्स्यति। अमुना सर्वे देशवासिना: कोरोना इति वैश्विक संक्रमणं विरुध्य प्रचाल्यमाणं संघर्षं अतोऽपि सुदृढीकर्तुं प्रार्थितम्।

पीएम वाराणसी

प्रधानमन्त्री नरेन्द्र मोदी श्व: स्वीय-संसदीय-क्षेत्रस्य वाराणस्या: यात्रां विधास्यति। तत्रासौ राष्ट्रिय राजमार्ग ऊनविंशति: इत्यस्य वाराणसी-प्रयागराजयो: खण्डान्तर्गतं विनिर्मितां षड्-पंक्ति-संवलितां राजमार्ग-परियोजनां लोकाय समर्पयिष्यति इति। स्वीय-यात्राक्रमे असौ तत्र देवदीपावली कार्यक्रमे सहभागं करिष्यति। देव-दीपावली पर्व वैश्विक स्तरे दीपानां सोत्साहं आयोज्यमाणं पर्व वर्तते यद्धि प्रत्येकस्मिन् वर्षे कार्तिक-पूर्णिमायां आमान्यते। इदं पर्व वाराणस्या: राजघाट-इत्यस्मिन् स्थले प्रधानमन्त्रिणो मोदिनो दीप-प्रज्वालनेन सह समारप्स्यते तदनन्तरं गंगा नदीं उभयत: एकादश-लक्ष-दीपा: ज्वालयिष्यन्ते इति। प्रधानमन्त्री स्वीय-यात्रावधौ काशीविश्वनाथ परिसरं, सारनाथ पुरातत्वविभागीय परिसरं अपि अवलोक-यिष्यते इति।

शाह फार्मर्स

गृहमंत्रिणा अमित शाहेन आन्दोलन-कारिण: कृषका: सम्प्रार्थिता: यत् प्रशासनं तै: साकं विचार-विनिमयाय वर्तते सन्नद्धम्। वार्ताहरै: सहभाषमाणो अमितशाहो अब्रवीत् यत् केन्द्रीय कृषि मन्त्रिणा कृषका: आगामि दिसम्बर मासस्य तृतीये दिनाङ्के परामर्शाय समाहूता: सन्ति। तेन इदं अपि स्पष्टीकृतं यत् केन्द्रप्रशासनं कृषिवलानां समस्यां समाधातुं अपि च तेषां याचना: सम्पूरयितुं सर्वत्मना प्रयतते इति।

(इदं संस्कृतवार्ता-प्रसारणम् आकाशवाणीत: प्रसार्यते। दैशिकी: वैदेशिकीश्च प्रत्यग्रवार्ता: ज्ञातुं नुदन्तु **news on air** इति अस्माकम् अन्तर्जालीय वेबफलकम्।)

कोविड अपडेट

स्वास्थ्यमंत्रालयेनोक्तं यत् देशे विगते अहोरात्रे कोरोना-संक्रमणस्य दशाधिक-अष्ट-शताधिक-एकचत्वारिंशत् सहस्रं नूतनप्रकरणानि पञ्जीकृतानि। अत्रान्तरे संक्रमितजनानां संख्या विवर्ध्य विंशत्यधिक-नवशताधिक द्विनवति सहस्रं यावत् संवृत्ता, एवञ्च षड्नवत्यधिक चतुर् शतं जना: कालकवलीभूता:। अधुनापर्यन्तं मृतकानां संख्या षड्नवत्यधिक षड् शताधिक षड्त्रिंशत् सहस्राधिक एक लक्षं अभूत्। सहैव अष्टनवत्यधिक द्विशताधिक द्विचत्वारिंशत् सहस्रं रोगिण: स्वस्थीभूता:। देशस्य स्वास्थ्यलाभ: प्रतिशतं अष्ट-षड् दशमलवोत्तर त्रिनवतिमितोऽस्ति संवृत्त:।

अफगान ब्लास्ट

अफगानिस्तानस्य गजनीप्रान्त: अद्य एकेन कारयान-विस्फोटकेन आकुलित:। विस्फोटकेऽस्मिन् प्राय: त्रिंशत् जना: कालकवलीभूता: एवञ्च अफगान-सुरक्षा-बलस्य चतुर्विंशति सैनिका: व्रणिता:। आधिकारिकरूपेण संसूचितं अस्ति यत् विस्फोटकस्य तीव्रतां आलक्ष्य व्रणितेषु उपचिति: सम्भाव्यते। अयं विस्फोट: सार्वजनिक सुरक्षा-बलस्य परिसरं लक्ष्यीकृत्य विहितम् आसीत्। अस्मात् कारणात् परिसरं परित: नागरिक-आवासा: अपि क्षतिग्रस्ता: अभूवन्। अस्य विस्फोटकस्य उत्तरदायित्वं अधुना पर्यन्तं न केनापि आतङ्किगुल्मेन उररीकृतमस्ति।

राजस्थान – पीयूष गोयल

रेलमन्त्रिणा पीयूष गोयलेन उक्तं यत् केन्द्रप्रशासनेन गत षड्-वर्षेषु रेलविभागस्य आधारभूत-संरचनायै यात्रीणां-सुविधायै च अभूतपूर्व-कार्याणि-अनुष्ठितानि। अद्य बांदीकुई डिगवाड़ा-रेलखण्डस्य विद्युतीकृत-खण्डस्य उद्घाटनं कुर्वता गोयलेनोक्तं यत् रेलविभागेन सर्वेषु क्षेत्रेषु महत्साफल्यं समधिगतम् इति।

क्रिकेट

भारतं आस्ट्रेलिया देशं च अन्तरा एकदिवसीय –स्पर्धामालिकाया: द्वितीया स्पर्धा आस्ट्रेलिया देशेन एकपञ्चाशत् धावनाङ्कै: विजिता। आस्ट्रेलिया दलेन भारताय नवत्युत्तर-त्रिशतं धावनाङ्कानां लक्ष्यं संस्थापितम् आसीत्। प्रत्युत्तर भारतं अष्टात्रिंशदधिक त्रिशतं धावनाङ्कानेव समार्जयत्। अनेन विजयेन साकं आस्ट्रेलिया दलं शृंखलायां शून्यं विरूध्य द्वाभ्यां अंकाभ्यां अग्रत्वं भजते। अन्तिमा स्पर्धा आगामि मासस्य द्वितीये दिनांके आयोक्ष्यते।

पुनरेकवारं मुख्यवार्ता:

- प्रधानमन्त्री नरेन्द्रमोदी प्रावोचत् यत् कृषि-परिष्कारै: कृषीवला: सबला: भविष्यन्ति। एतत्परिष्कारै: तेभ्य: नूतनाधिकारा: अवसरा: स्वातन्त्र्यञ्च प्राप्स्यते इति।

- प्रधानमन्त्री मोदी अद्य पूर्वाह्ने स्वीये मन की बात इति कार्यक्रमे देशवासिभि: साकं विचार विनिमयं व्यदधात्। तेन प्रोक्तं प्रौद्यौगिक्या साहाय्येन संस्कृति: भावनात्मकं सम्बलं अधिप्राप्नोति, गुरोनानकस्य विचारा: वैकूंवरत:-वेलिङ्गटनं, सिंगापुरत:-दक्षिणाफ्रीकां यावत् गुञ्जायमाना: इति।
- देव दीपावली इति वैश्विक दीपोत्सवकार्यक्रमे भागं ग्रहीतुं प्रधानमन्त्री श्रीनरेन्द्र मोदी श्व: वाराणसी यात्रां सम्पादयिष्यति। प्रधानमन्त्रिण: दीपज्वालेन साकं दीपोत्सवोऽयं समारप्स्यते, गंगा नदीम् उभयत: एकादश लक्षसंख्याका: दीपा: ज्वालयिष्यन्ते इति।
- केन्द्रीयो गृहमन्त्री अमितशाह: कृषकान् समाश्वासयत् यत् प्रशासनं तै: साकं संवादार्थं तत्समस्या: सामाधातुं वर्तते सन्नद्धम्।
- कोविड-19 इति वैश्विक-संक्रमणदिशि भारतीय: संघर्ष: निर्णायक-स्तरं अवर्धत। स्वास्थ्यलाभमिति: षड् अष्ट दशमलवोत्तर त्रिनवतिमितास्ति संवृत्ता।
- अपि च क्रीडावार्तायाम्,

- सिडनी क्रीडांगणे अद्य क्रीडिता स्पर्धा आस्ट्रेलिया दलेन विजिता। अनेन सहैव स्पर्धामालिकापि स्वायन्तीकृता ऑस्ट्रेलिया देशेन।

॥ इति वार्ता: ॥